त्समापनस्य श्रुतत्वात्तदेव यादृक्तादृक् च होतव्यमित्यच्छिद्रकाण्डे दर्शनाद्यादृक्तादृगयथाकथंचिदङ्गहीनमपि प्रधानमनुष्ठेयमिति ।

वाक्यार्थः—विध्यपराधेऽपि समाप्तेर्दर्शनात् । चकारोऽप्यर्थकः ।

इदानीमग्निहोत्रोद्धरणमन्त्रः सत्रोर्थोऽप्यस्ति न वेति विचार्यते—

**न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ।** ( जै० त० ९ । ४ । ३१ । )

**दीपिका**—दर्शोपक्रमेऽग्न्युद्धरणे क्रियमाणे किमग्निहोत्राङ्गभूत उद्धरणमन्त्रो वाचा त्वा होत्रेत्यादिः प्रयोक्तव्यो नेति संशयः । तत्र—

दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्तते ।
साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ॥

तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दधिपयसोः प्रणीताधर्मा इव कर्तव्य एव मन्त्रः । कालमनादृत्य कालस्य गुणत्वेनासंभवेऽपि मन्त्रस्य लोपोऽन्याय्यः । अथवोद्धरणमप्येतदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणमन्यथाऽग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यं स्यादिति प्राप्तेऽभिधीयते —

काले खल्वनुपादेये प्राप्ते कर्म विधीयते ।
साङ्गं तस्मात्तु कालात्प्राङ्नाधिकारोऽस्ति कर्मणि ॥

अनधिकारिणा च क्रियमाणं निष्फलं स्यादित्यतः प्रागेव कालेऽग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वा कर्तव्यः ।

**पुनराधेयमोदनवत् । द्रव्योत्पत्तेर्वोभयोः स्यात् ।** ( जै० त० ६ । ४ । २६–२७ । )

**दीपिका**—" यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः " इति किमुभयानुगमो निमित्तमुतान्यतरानुगमोऽपीति । समस्तपञ्चशरावन्यायेनान्यतरानुगममात्रं निमित्तमिति प्राप्त उच्यते—

सत्यं निमित्तवेलायामुभावित्यविवक्षितम् ।
नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम् ॥

पुनराधेयं हि वाक्यान्तरेण यादृशमवगतं तादृशमेव गार्हपत्याहवनीययोर्द्वयोर्निमित्तेन नवेलायामनुगतयोरुत्पादकत्वेन चोद्यते, तत्र सहितयोरेव तयोरुत्पादकमवगतं नान्यतरस्य । अतस्तादृशमेवात्र विधीयमानमन्यतरानुगमे कार्यं कर्तुं न क्षममित्युभयानुगमे स्यात् ।

सिद्धान्तभूतद्वितीयसूत्रार्थः—प्रथमसूत्रेणैन्द्रपञ्चशरावौदनदृष्टान्तेनान्यतरवह्नेरनुगमननिमित्तेऽपि पुनराधेयमुक्तं तत्र सिद्धान्तमाह–द्रव्योत्पत्तेरिति । उभयोरनुगमे पुनराधानं स्यात् । द्रव्योत्पत्तेरग्निरूपद्रव्योत्पत्तेः । आधानकार्यत्वादिति पूरणीयम् । पुनराधेयमित्यनेन वसन्ते ब्राह्मणोऽग्निमादधीतेत्यनेन विहिताधानादन्यद्विधीयते मासाग्निहोत्रवत् । प्रकृताधानेऽग्निद्वयोत्पादकत्वमाधानस्य क्लृप्तम् । एकाग्निनाशे तदुत्पादकत्वस्याक्लृप्तत्वादत्राग्निद्वयनाशो निमित्तमिति वक्तव्यमिति भावः ।

## इति प्रायश्चित्तमीमांसा ।

विशये प्रायदर्शनात् । अर्थवादोपपत्तेश्च । ( जै० त० २ । ३ । १६ । १७)

दीपिका—अग्निहोत्रदोहाधिकारे 'वत्समालभेत' इति श्रुत तत्रासत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भत्वसामान्यादत्रापि यागविधिं मन्यन्ते । तस्योत्तरम्–आलम्भो नाम स्पर्शमात्रं न तस्य यागत्वरोगानुपपत्तिः । लोकेऽपि च दृष्टत्वादतोऽत्राऽऽलम्भमात्रं वत्ससंस्कारो विधीयत इति ।

## पुनराधेयमीमांसाविशेषः ।

पुनराधानेऽग्न्याधानदक्षिणाना दानं कैश्चित्प्रयोगशास्त्रकारैः सूत्रितं तत्र मीमांसैवम्–

दीपिका–अस्ति पुनराधेयं तच्चाग्न्याधेयधर्मकं नैमित्तिकं वा । तत्र श्रूयते–" पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः " इत्यादि । सेयं दक्षिणा किमग्न्याधेयस्य दक्षिणानामेका देयेत्येवमादीना निवर्तिका न वेति चिन्तायां सत्यप्येककार्यत्वे वचनादुभयोर्ददानीति समुच्चयप्राप्तावुच्यते–विध्यश्रवणाद्विध्यन्तरशेषत्वाच्चास्य समुच्चयविधावसामर्थ्याद्दक्षिणयोश्चाऽऽनत्यर्थत्वमनेककार्यत्वेनैककार्यत्वाद्वैकृताभिः प्राकृतीनां बाधः । कथं पुनरुभयोर्ददातीति निर्देशः–उच्यते कृत्वा ह्यग्न्याधेयं पश्चात्पुनराधेयं क्रियते । तेन पूर्वदत्तसंप्रति[illegible] निर्देशः ।

सूत्रं तदर्थश्च–

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ।**
( जै० त० १० । ३ । ३० ) ।

सुबोधिनी—'योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्ते ' इत्यग्न्याधेयविकृतिराम्नाता । तत्र वैकृतदक्षिणा पुनर्निष्कृतो रथो दक्षिणेत्यादिः श्रुता । आधानान्मिथुनौ गावौ ददातीत्यादि प्राप्तम् । अत्र समुच्चयो बाधो वेति संशये पूर्वपक्षमाह—अग्न्याधेयेति । नैमित्तिके पुनराधेये गुणस्य दक्षिणायाः पुनर्निष्कृतो रथो दक्षि-

णेत्यनेन विकारे प्राप्तेऽप्यग्न्याधेयस्य दक्षिणादानमधिकं समुच्चितं स्यात् । वाक्यसंयोगात् । तत्राप्युभयीर्ददात्याग्न्याधेयिकीः पुनराधेयिकीश्चेतिवाक्येन संयोगात् ।

**शिष्टत्वाच्चेतरासां यथास्थानम् । ( जै० त० १० । ३ । ३१ । )**

**सुबोधिनी**—साधकान्तरमाह—शिष्टत्वादिति । यथास्थानं यथाक्रममितरासां प्राकृतदक्षिणानां शिष्टत्वात् । अनुशासनात् । अनुशासनं चैवं श्रूयते—'आग्न्याधेयिकीर्दत्त्वा पुनराधेयिकीर्ददाति' इति ।

सिद्धान्तमाह—

**विकारस्त्वप्रकरणे हि काम्यानि । ( जै० त० १० । ३ । ३२ । )**

**सुबोधिनी**—विकार इति । हि यस्मात्कारणात्काम्यानि पुनराधेयानि । प्रयोगबहुत्वाभिप्रायं बहुवचनमतोऽप्रकरणेऽप्रकृतौ विहितदक्षिणयेति शेषः । विकारो बाधः प्राकृतस्य ।

**शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते । ( जै० त० १० । ३ । ३३ । )**

**सुबोधिनी**— पूर्वपक्षिणा दर्शितवाक्यसंगतिमाह—शङ्कत इति । पूर्वोक्तवाक्य उभयत्वं श्रूयते तत्स्वार्थपरं नेति पूरणीयम् । कुतः—हि यस्माच्छङ्कते निवृत्तेः प्राकृतदक्षिणाविषये शङ्कते । पूर्ववाक्यसमीप एव यद्वैकृतीर्ददाति दक्षिणा उभयीरपि दाक्षिणास्तेन प्रत्ता भवन्तीति श्रूयते । अत्र प्रत्ता भवन्तीति शब्देन प्राकृतदाक्षिणान्त्यागाद्वयर्थत्वशङ्कायाः समाधानं कृतम् । अतः पूर्ववाक्यं जर्तिलयवाग्वा जुहुयादितिवत्पूर्वपक्षपरमिति भावः ।

**इत्यग्निहोत्रचन्द्रिका ॥**